**तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।**
**तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥१०४ ॥**

तप इति । तपः स्वधर्मवृत्तित्वमिति तावद्दर्शनात् । आश्रमविहितं कर्मात्मज्ञानं च ब्राह्मणस्य मोक्षसाधनं तत्र तपसोऽवान्तरव्यापारमाह । तपसा पापमपहन्ति । ब्रह्मज्ञानेन मोक्षमाप्नोति । तथा च श्रुतिः । विद्यां चाविद्यां च यस्तीत्वोंभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते । विद्यातोऽन्यदविद्या कर्म मृत्युदुःखसाधनत्वान्मृत्युः पापं श्रुत्यर्थ एवायं मनुना व्याख्यायोक्तः ॥ १०४ ॥

**प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।**
**त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ १०५ ॥**

प्रत्यक्षमिति । धर्मस्य तत्त्वावबोधमिच्छता प्रत्यक्षमनुमानं च धर्मसाधनभूतद्रव्यगुणजातितत्त्वज्ञानाय यथाशास्त्रं च वेदमूलं स्मृत्यादिरूपं नानाप्रकारधर्मस्वरूपविज्ञानाय सुविदितं कर्तव्यं तदेव च प्रमाणत्रयं मनोरभिमतम् । उपमानार्थापत्त्यादेश्चानुमानान्तर्भावः१०५

**आर्षं धर्मोपदेशं च वेदशास्त्राऽविरोधिना ।**
**यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ १०६ ॥**

आर्षमिति । ऋषिदृष्टत्वादार्षं वेदं धर्मोपदेशं च तन्मूलस्मृत्यादिकं यस्तदविरुद्धेन मीमांसादिन्यायेन विचारयति स धर्मं जानाति न तु मीमांसानभिज्ञः धर्मे करणं वेदो मीमांसा चेतिकर्तव्यतास्थानीया । तदुक्तं भट्टवार्तिककृता । धर्मे प्रमीयमाणे हि वेदेन करणात्मता । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥ १०६ ॥

**नैःश्रेयसमिदं कर्म यथोदितमशेषतः ।**
**मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १०७ ॥**

नैःश्रेयसमिति । एतन्निःश्रेयससाधनं कर्म निःशेषेण यथावदुदितम् । अत ऊर्ध्वमस्य मानवशास्त्रस्य रहस्यं गोपनीयमिदं वक्ष्यमाणं शृणुत ॥

**अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् ।**
**यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥**

अनाम्नातेष्विति । अस्य शास्त्रस्यासमस्तधर्माभिधानमाशङ्क्य बोध-

यति । सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथं कर्तव्यं स्यादिति यदि संशयो भवेत्तदा यं धर्मं वक्ष्यमाणलक्षणाः शिष्टा ब्राह्मणा ब्रूयुः स तत्र निश्चितो धर्मः स्यात् ॥ १०८ ॥

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥१०९॥

धर्मेणेति । ब्रह्मचर्याद्युक्तधर्मेण यैरङ्गमीमांसाधर्मशास्त्रपुराणाद्युपबृंहितो वेदोऽधिगतस्ते ब्राह्मणाः श्रुतेः प्रत्यक्षीकरणे हेतवो ये श्रुतिं पठित्वा तदर्थमुपदिशन्ति ते शिष्टा विज्ञेयाः ॥ १०९ ॥

दशावरा वा परिषद्यं धर्मं परिकल्पयेत् ।
त्र्यवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत् ११०

दशेति । यदि वहवः सन्तोऽवहिता न भवन्ति तदा दशावराऽत्र्यवराश्चेति वक्ष्यमाणलक्षणा यस्याः सा परिषत् तदभावे त्रयोऽवरा यस्याः सा वा सदाचारा यं धर्मं निश्चिनुयात्तं धर्मत्वेन स्वीकुर्यान्न विसंवदेत् ॥ ११० ॥

त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥ १११ ॥

त्रैविद्य इति । वेदत्रयसंबन्धशाखात्रयाध्येतारः श्रुतिस्मृत्यविरुद्धन्यायशास्त्रज्ञो मीमांसात्मकतर्कविन्निरुक्तज्ञो मानवादिधर्मशास्त्रवेदी ब्रह्मचारी गृहस्थवानप्रस्थौ इत्येषा दशावरा परिषत्स्यात् १११

ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥ ११२ ॥

ऋग्वेदविदिति । ऋग्यजुःसामवेदशाखानां येऽध्येतारस्तदर्थज्ञाश्च त्रयः सा धर्मसंदेहनिरासार्थं त्र्यवरा परिषद्बोद्धव्या। तदभावे ॥

एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।
स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥११३॥

एकोऽपीति । एकोऽपि वेदार्थधर्मज्ञो यं धर्मं निश्चिनुयात् प्रकृष्टो धर्मः स वोद्धव्यो न वेदानभिज्ञानां दशभिः सहस्रैरप्युक्तः । वेदविच्छब्दोऽयं वेदार्थधर्मज्ञपरः । एतच्च श्रेष्ठोपलक्षणम् । स्मृतिपुराण-

मीमांसान्यायशास्त्रज्ञोऽपि गुरुपरंपरोपदेशविदपि तथा । केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः । युक्तिहीनविचारे तु धर्महानिः प्रजायते । तेन वहुस्मृतिज्ञोऽपि यदि सम्यक् प्रायश्चित्तादिधर्मं जानाति तदा तेनाप्येकेन धर्म उक्तः प्रकृष्टो धर्मो ज्ञेयः । अत एव यमः । एको द्वौ वा त्रयो वापि यं ब्रूयुर्धर्मपाठकाः । स धर्म इति विज्ञेयो नेतरेषां सहस्रशः ॥ ११३ ॥

**अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।**
**सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ ११४ ॥**

अव्रतानामिति । सावित्र्यादिब्रह्मचारिव्रतरहितानां मन्त्रवेदाध्ययनरहितानां ब्राह्मणजातिमात्रधारिणां वहूनामपि मिलितानां परिषत्त्वं नास्ति । धर्मनिर्णयसामर्थ्याभावात् ॥ ११४ ॥

**यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः ।**
**तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ॥ ११५ ॥**

यं वदन्तीति । तमोगुणवहुला मूर्खा धर्मप्रमाणवेदार्थानभिज्ञा अत एव प्रश्नविषयधर्माविदः प्रायश्चित्तादिधर्मं यं पुरुषं प्रत्युपदिशन्ति तदीयं पापं शतगुणं भूत्वा वाचकान्वहून् भजेत ॥ ११५॥

**एतद्वोऽभिहितं सर्वं निःश्रेयसकरं परम् ।**
**अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिम् ११६**

एतद्व इति । एतन्निःश्रेयससाधकं प्रकृष्टं धर्मादिकं सर्वं युष्माकमभिहितम् । एतदनुतिष्ठन् ब्राह्मणादिः परमां गतिं स्वर्गापवर्गरूपां प्राप्नोति ॥ ११६ ॥

**एवं स भगवान् देवो लोकानां हितकाम्यया ।**
**धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान् ॥ ११७ ॥**

एवमिति । स भगवानैश्वर्यादिसंयुक्तो द्योतनाद्देवो मनुरुक्तप्रकारेणेदं सर्वं धर्मस्य परमार्थं शुश्रूषुशिष्येभ्यः अगोपनीयं लोकहितेच्छया ममेदं सर्वमुक्तवानिति भृगुर्महर्षीनाह ॥ ११७ ॥

**एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।**
**जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥ १२४ ॥**

एष इति । एष आत्मा सर्वान्प्राणिनः पञ्चभिः पृथिव्यादिभिर्महाभूतैः शरीरारम्भकैः परिगृह्य पूर्वजन्मार्जितकर्मापेक्षयोत्पत्तिस्थितिविनाशै रथादिचक्रवदसकृदुपावर्तमानैरामोक्षात्संसारिणः करोति ॥

इदानीं मोक्षत्वेनोक्तसर्वधर्मश्रेष्ठतया सर्वत्र परमात्मदर्शनमनुष्ठेयत्वेनोपसंहरति—

**एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।**
**स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥१२५ ॥**

एवं यः सर्वभूतेष्विति । एवं सर्वभूतेषु चात्मानमित्याद्युक्तप्रकारेण यः सर्वेषु भूतेष्ववस्थितमात्मानमात्मना पश्यपि स ब्रह्मसाक्षात्कारात्परं श्रेष्ठं पदं स्थानं ब्रह्म प्राप्नोति । तत्रात्यन्तं लीयते मुक्तो भवतीत्यर्थः ॥

**इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन् द्विजः ।**
**भवत्याचारवान्नित्यं यथेष्टां प्राप्नुयाद्गतिम् ॥१२६ ॥**

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः ॥ १२ ॥ समाप्तैषा मनुसंहिता ॥**

इत्येतदिति । समाप्त्यर्थ इतिशब्दः । एतत्स्मृतिशास्त्रं भृगुणा प्रकर्षेणोक्तं द्विजातिः पठन् विहितानुष्ठाननिषिद्धवर्जनात्सदाचारवान् भवति । तथाऽपेक्षितां च स्वर्गापवर्गादिरूपां गतिं प्राप्नुयादिति २६

सारासारवचःप्रपञ्चनविधौ मेधातिथेश्चातुरी स्तोकं वस्तु निगूढमल्पवचनाद्गोविन्दराजो जगौ । ग्रन्थेऽस्मिन् धरणीधरस्य बहुशः स्वातन्त्र्यमेतावता स्पष्टं मानवमर्थतत्त्वमखिलं वक्तुं कृतोऽयं श्रमः ॥ १ ॥ प्रायो मुनिभिर्विवृतं कथयत्येषा मनुस्मृतेरर्थम् । दशभिर्ग्रन्थसहस्रैः सप्तदशयुता कृता वृत्तिः ॥ २ ॥ सेयं मया मानवधर्मशास्त्रे व्यधायि वृत्तिर्विदुषां हिताय । दुर्बोधजातेर्दुरितक्षयाय भूयात्ततो मे जगतामधीशः ॥ ३ ॥

इति वारेन्द्रिनन्दनावासीयदिवाकरात्मजश्रीमत्कुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वादशोऽध्यायः समाप्तः ॥ १२॥

इति श्रीकुल्लूकभट्टविरचिता मन्वर्थमुक्तावली समाप्ता ॥ ॥

---